


## मासिकी पत्रिका

संस्कृतभाषाप्रचारिणी सभा, चित्तूरु (आ० प्र०)

संपुटः २] 15 DECEMBER 1964 [क्रमाङ्कः १२



वार्षिकोत्सवसमारोहः
१५—११—१९६४

वार्षिकोत्सवांकः] शकवर्षः १८८६ [मूल्यम् ४० पैसाः

# विषयसूची







वाणीं भजत गैर्वाणीम् !



# देवि वसुन्धरे !

देवि वसुन्धरे देहि सस्यादिकम् ।
पाहि ते सुतान् भारतीयानमून् ॥
अन्नहीनान् परिखिन्नमनस्कान्
विच्छिन्नधैर्यान् अपरिच्छिन्नयशस्कान् ।
नित्यान्नदायिनः अत्योन्नतमानसान्
अत्यल्पसन्तुष्टान् अनल्पसुगुणजुष्टान् ॥ ॥ देवि ॥
कृष्णागोदावरीतुंगापिनाकिनी-
कावेरीगंगाः ब्रूहि अस्मानवितुम् ।
सेतूनविघटयितुं वेलामनुल्लंघयितुम्
कालदेशानुकूलं कलयितुं स्वप्रवहान् ॥ ॥ देवि ॥
फलय सस्यं बहु पटुतायुतं चैव
अपसारय सस्यरोगान् अनुक्षणसंक्रमान् ।
माऽवसरं प्रयच्छेः औषधानां प्रयोगस्य
मा निस्सारं कुरु महनीयं ते सस्यजातम् ॥ देवि ॥
मा चोदय भारतीयान् मनसापि अन्यान् याचितुम्
अव तेषां हस्तमुपरि मा नीचैः कुरु कदापि ।
पशुभिः क्षीरसमृद्धिं परितो विस्तारय नित्यम्
भृशं सत्वसंवलितान् अस्मानाधेहि ते तनयान् ॥देवि॥
ब्रूहीन्द्रं वरुणं अथ प्रणाधारं वायुं
रविचन्द्रौ रात्रिंदिवं रक्षितुं भारतसस्यम् ।
नवनवोन्मेषा निमेषैरेवैषां सस्यानि
पूरयिष्यन्ति कुक्षीः अवेहि कोष्ठानि च प्रपंचस्य ॥देवि॥



# सम्पादकीयम्

## कर्मण्येवाधिकारस्ते

भगवतस्संकल्पः विकल्पश्च मनुजबुद्ध्या उत्प्रेक्षितुमपि न शक्यते। अघटितघटनापटीसी सर्वेश्वरस्य आज्ञा अवितथा अनुल्लंघनीया प्रस्फुरति सर्वदा सर्वथा च। को वा अचिन्तयत भारतदेशनायकः श्री नेहरूमहाशयः एतावत्येव काले अपसरेदिति श्री लालबहदूरशास्त्री च राजदण्डं वहेदिति च। को वा अभ्यूहते स्म क्रुश्चेवः स्वपदात् स्खलेदिति अन्यः तत्पदमधिरोक्ष्यतीति च। तथैव कोवा जानाति अय्यूबखान एव पाकिस्थानं पालयेत् अथवा फातिमाजिन्ना पालयेदिति। कश्च वा जानाति अम्मेरिकायाः अधीशः अमुकः भविष्यतीति। सर्वमिदं कालगर्भितं दुर्भाव्यं भगन्नियमनानुभावि च चित्रविचित्रं सम्पद्यते।

तस्मात् "कर्मण्येवाधिकारस्ते" इति भगवद्वचनमनुस्मृत्य जनैः कर्मपरैः भाव्यम्। विशेषतः कर्मभूमौ वर्तमानैः भारतीयैरस्माभिस्सर्वदा कर्मनिष्ठैः भवितव्यम्। न भीतिः न वा विषादः अस्मासु प्रादुर्भवेत्। "हतो वा प्रप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्" इतिवत् उभयथापि आनुकूल्यमेवास्माकम्। शत्रुजनावरुद्धे अस्मद्देशपार्श्वे, जलाप्लवादिभिरुपप्लवैः आहारसंकटे समुत्पन्ने, निरुद्योग-निर्वेद-निष्क्रियतादिदोषैः प्रजासु क्लिश्यन्तीषु च भारतीयैः अधैर्यं नावलंब्यम्। अधैर्येण सहजशक्तिरपि विनष्टा भवति, अचिंतिता उपद्रवाः संभवेयुः। अतः धैर्यं नावसादयेत्। अस्मिन् आपत्समये भारतीयेन जनेन धीरेण सत्यनिष्ठेन दयालुना परोपकारिणा क्षमाशालिना च भवितव्यम्। प्रथमतः सर्वकारस्य आज्ञाः अक्षरशः परिपालनीयाः। तासु दोषारोपं अन्यथानयनं विमर्शं च त्यजेत्। एकसूत्रतासाधनाय शासनविधेयता आवश्यकी। शासनतिरस्कारिणां सन्मार्गबोधनं प्रभुतायाः सूचनं च कुर्यात। उत्कोचप्रदातारं गृहीतारं च न क्षमेत। संघे शक्तिः कलौ युगे इति वचनं अत्यन्तवास्तवम्। संघबलेन राज्यानि स्थाप्यन्ते तानि पाल्यन्ते च। अतः सर्वकारमुखमनभिवीक्ष्यैव संघः कुमार्गगं शिक्षेत।

पुरा न्यायस्थानप्रवेशं विनैव संघाः न्यायनिर्देशमकुर्वन्। परन्तु तत्र पक्षपातादिदोषा आसन्निति तु अन्यदेतत्। तदा अभियोगानां न्यूनता अनुभूता। इदानीं तु पदे पदे कलहाः कपटाः पक्षाः दीक्षाश्च अतीव वर्धन्ते। न्यायवेदिनां न्यायवादिनां च बाहुल्यात् कौशल्यात् च अभियोगाः विपुलीभवन्ति। धर्मः अधर्मो भवति अधर्मश्च धर्मः। साधुरसाधुर्भवति असाधुश्च साधुः।

एतत्फलितत्वेन ग्रमेषु नगरेषु देशेषु च विभिन्नाः पक्षाः समुद्भवन्ति। अपि च राजकीयनेतृणां कुटिलनीत्या च बहवः विभेदाः जनेषु उद्भवन्ति। न सामान्यतः जनेषु, अपितु कुटुंबे कुटुंबे च अनेकता अभिप्रायभेदाश्च उत्पद्यन्ते। पंचायत्ताधीनतया सर्वकारसमर्पिताः धान्यकणाः शर्करालवा अपि जनेषु न्यायतो विभक्ता न भवति। प्रबलानां बहुलतया अबलानां शून्यतया च वस्तूनि विभज्यन्ते। कुत्रचित् स्थलेषु समयेषु च वस्तुजातमदृश्यमेव भवति।

एवं च अधिकारिणां जनानां अत्याशा अविनीतिः एतादृशानां संकटानां कारणं भवति। अद्यतनस्सर्वकारः दोषगवेषणे दण्डने च जागरूक एव वर्तते इति सुमहत् सन्तोषस्थानं। अनेके सर्वकारेण निगृहीताः एव। तथापि इतोप्यधिकतया सांघिकदोषान् विचित्य प्रक्षालयेत् खण्डयेद्वा दुष्टांगानि दुष्टांगानीव।

प्रजाभिरपि दोषपरिज्ञानाय सर्वकाराय सहायः कार्यः। अन्यथा विशाले अस्मिन् देशे कुत्र किं भवतीति ज्ञातुं तेन कथं पार्येत? अतः प्रजाः सकलैः प्रकारैः प्रभुतां सहकृत्य कृत्यनिष्ठां तां कुर्युः॥



# सुलभपाठमाला ७

## आकारान्तशब्दाः (स्त्रीलिंगाः)

रमां वन्दे । रमा कृपया मां पश्यतु । हे रमे मां कृपया पश्य । रमायाः पतिः हरिः । सीतायाः पतिः रामः सीतया सह वनं अगच्छत् । बालाः (बालिकाः) अत्र नृत्यन्ति गायन्ति च । लतासु पुष्पाणि विलसन्ति । वीणायाः ध्वनिः मधुरः भवति । गंगायै नमः । दशरथस्य भार्याः तिस्रः । सः तासु सुतान् अलभत । पाठशालाः पोषयन्ति धनिकाः । लताः रोहयन्ति मालाकाराः । लतासु जातीलता सुकुमारा भवति । रावणस्य ग्रीवाः दश । मधुरायां कृष्णः अजायत । सन्ध्यायां वन्दन्ते ऋषयः । निशायां राजते चन्द्रः । धरायां राजते नृपः । ताराणां अधिपः चन्द्रः । कृष्णः कारायां अजायत । रामः अयोध्यायां अजायत । विद्या धनात् अधिका । कलानां निलयं कलाशालां वदन्ति । चन्द्रस्य कलाः शुक्लपक्षे वर्धन्ते कृष्णपक्षे क्षीयन्ते । चन्द्रिका आनन्दावहा वर्तते । वेदिकासु उपविशन्ति जनाः । वेदिकासु दीपिकाः अर्पयन्ति कार्तिक-पूर्णिमायाम् ।

प्रश्नाः – का लता सुकुमारा भवति ? कस्याः ध्वनिः मधुरः भवति ? रामः कुत्र अजायत ? मालाकारः किं करोति ? चन्द्रस्य कलाः कथं भवन्ति ? जनाः कुत्र उपविशन्ति ? कार्तिकपूर्णिमायां को विशेषः ?

शब्दाः – सीता, लता, बाला, कला, शाला, गंगा, मधुरा, सन्ध्या, भार्या, ग्रीवा, धरा, तारा, अयोध्या, चन्द्रिका, आनन्दावहा, दीपिका, पूर्णिमा, गीता, लीला –

एवमादयः रमाशब्दवत् ।



# सभायाः वार्षिकोत्सवः

एतद्वत्सरीयकार्तिकशुक्लैकादश्यां (१५-११-६४) भानुवासरे अस्याः सभायाः वार्षिकोत्सवः महता समारोहेण प्राचलत्।

प्रातः अष्टवादनसमये सभाभवने सर्वसभ्यसमावेशः प्रधानमन्त्रिणः श्री ति. कं. तिरुवेङ्कटाचार्यस्य आध्यक्ष्येण निर्वूढः। आयव्ययादीनि अनुमोदितानि, आगामिवत्सरकार्यक्रमश्च निर्णीतः। सांस्कृतिकसंस्थानां स्वानुबन्धतास्वीकारं प्रति पर्यालोच्य तदावश्यकनियमानां स्वरूपकल्पनाय उपसंघः कश्चन नियमितः। अत्र एते सभ्या भवन्ति – श्री ना. रामनाथअय्यरः अध्यक्षः, श्री के. मुनिरेड्डिः, श्री वि. वेंकटेशपंतुलः, श्री आ. वरदराज इति त्रयः सदस्याः।

अथ प्रातरेव दशवादनावसरे पाठ्यनिर्णायकसंघसमावेशः अभवत्। स च १९६४ पर्यन्तं आचाणीयस्यैव पाठ्यक्रमस्य १९६६ पर्यन्तं अनुसृतिं अन्वमोदत। १९६७ प्रभृति विचक्षणादिपरीक्षाणां पाठ्यांशेषु किंचित् परिवर्तनं अकरोत्। नूतननियमावलीं च यथाशीघ्र मुद्रयित्वा प्रचारयितुं कार्यवर्गमसूचयत च।



**कार्यदर्शी श्री रामनाथार्यः,**
निवेदिकां पठति.

सायं षड्वादनसमये श्रीरामविलाससभायाः मन्दिरे पट्टाभिराममन्दिरनाम्नि अभिरामे महासभायाः प्रारम्भ आसीत्। श्री आर्. बि. रायकृष्णराजमहोदयाः अध्यक्षपीठमलमकुर्वन्। गायकाग्रेसरेण श्रीमता अन्नामलनायकेन स्वानुचरसहितेन "वाणीं भजरे वाणीं" इत्यादिना प्रार्थनायां कृतायां प्रधानमन्त्री तिरुवेङ्कटाचार्यः स्वागतं समार्पयत अध्यक्षादिकेभ्यः सदस्येभ्यश्च।

ततः कार्यदर्शी श्री ना. रामनाथार्यः वार्षिकनिवेदिकायाः पठनपूर्वकं विविधप्रदेशेभ्य आगतान् शुभसन्देशान् अश्रावत्।



अध्यक्षः श्री आर्. बि. रामकृष्णराजः,
उपक्रमते.

तदनन्तरमध्यक्षाः श्री आर्. बि. रामाकृष्णराजमहोदयाः स्वभाषणे अद्यतनकाले संस्कृतप्रचारावश्यकतां तद्विषये एतत्सभायाः नित्यपरिश्रमं च प्रस्तूय अनन्तरकार्यक्रमं असूचयन्।



ततः महाविद्वान् श्री टि. के. गोपालाचार्यः (श्रीविशिष्टाद्वैतप्रचारसंघ-कार्यदर्शी) उपन्यासवेदीमधिष्ठाय एवं अवदत्।

संस्कृतपठनावश्यकता भारतीयानां अतीव वर्तते। आसेतु आबदरिकाश्रमं बहुवारं पर्यटतः मे संस्कृतगौरवं सम्यक् मनोगोचरमभवत्। विविधप्रान्तेषु विविधभाषाभाषिभिस्सह संस्कृतेनैव व्याहरन् स्वव्यवहारं निरातङ्कं निर्वहामि। अपि च संस्कृतभाषाभाषिणः मनुजस्य भारते विलक्षणमेव गौरवमस्तीत्यपि अन्वभवम्। द्राविडदेशे संस्कृतस्य प्रतिरोधोस्तीति वचनमसत्यं। तत्रापि संस्कृतमिलितया संस्कृतविकृतिभूतया वा द्राविड्या व्यवहारः प्रचाल्यते। अच्छद्राविडम्मन्यमानाश्च ते न जानन्ति स्वव्यवह्रियमाणानां शब्दनां मूलम्। अतः ते मूलज्ञाने सति अंगीकरिष्यन्त्येव संस्कृतपठनावश्यकताम्। जानन्त्येव भवन्तः आन्ध्रकर्णाट-महाराष्ट्रादीनां भाषाणां संस्कृतप्राणकत्वं। अहं एकां संघटनामद्य स्मरामि यदहं तिरुप्पावैप्रबन्धस्य अनुवादं हिन्दीभाषायां कृत्वा कस्मैचन सुप्रसिद्धाय औत्तराह-पंडिताय तं अदर्शयम्। तत्र कुत्रचित् स्थले मया "शुरूकिया" इति लिखितं दृष्ट्वा सः पंडितः "शुरू" पदं मार्जयित्वा "प्रारम्भ" इति अलिखत्। एतेन भवद्भिः ज्ञातमेव स्यात् यद् औत्तराहा अपि संस्कृतं हिन्द्या अपि अत्यादरेण पूजयन्तीति।

तस्मात् सकलभारतदेशस्य हिन्दीतः संस्कृतमेव अभ्यर्हितं आशास्यं राष्ट्र-भाषापदाभिषेकार्हं च। कालक्रमेणापि अस्यैव अंगीकारः भविष्यति। अतः तत्प्रचारः तदभ्यासः च न कदापि विश्रामयितव्यः।

अहं जनामि एतत्समायाः परिश्रमं संस्कृतस्य व्यापने बहोः कालात्। प्रजानां सर्वकारस्य च सहकारेण इयं सभा इतः परमपि स्वप्रचारक्षेत्रं विस्तार्य गृहे गृहे मुखे मुखे च संस्कृतगुंजनमुदञ्चयेत्। एतदानुकूल्याय परमेश्वरं भगवन्तं प्रार्थये इति।

ततः माणवकानां प्रवचनस्पर्धा समवर्तत सुतप्रभाते ५४ संख्याकाः भगवद्गीतायां २० संख्याकाः बालरामायये १८ संख्याकाश्च समुपस्थिता अभवन्।

अनन्तरं रङ्गप्रदर्शनं समारब्धम्। "आरुणेर्गुरुभक्तिः" "ब्राह्मणद्वारपाल-संवादः" इति द्वेखण्डिके प्रदर्शिते। मध्ये मध्ये "चल चल चल भारत छलनापर-शिक्षणाय" "भारतभारती परितो विजयताम्" "गृहे गृहे प्रवर्तताम्" इत्यादि गेयानां गानपूर्वकं बालबालिकानां नृत्यानि समभवन् एवं प्रदर्शनं सकलंसंस्कृतमय-मेव घंटाद्वयपर्यन्तमासीत्।

अन्ते च पुरपालकसंघविशिष्टाधिकारिणा श्रीमता आर्. रामानुजुलुनायुडु-महाशयेन स्पर्धाप्रविष्टेभ्यः, नाट्यनाटकभागिभ्यश्च ९६ पारितोषिकानि प्रदत्तानि। दक्षिणायनपरीक्षासु परिचयपरीक्षायां अत्युत्तमतया उत्तीर्णाय विशिष्टं पारितोषिकं प्रदत्तम्।

अध्यक्षाणां उपसंहारवाक्यैः श्रीमतः टि. के. रंगरामानुजाचार्यस्य वन्दन-समर्पणेन "प्रवर्धतां प्रवर्धतां प्रवर्धतां प्रवर्धतां" इति मंगळगीतेन च समावेशः सुपूरितः॥





# राजाजीकथा ८



## ना कामी मोक्षकामी स्यात्
## [ स्वभावो दुरतिक्रमः बलवानिन्द्रियग्रामः ]

**( श्री आ. वरदराजः )**

तपस्यन् कश्चन मुनिः पक्षिणः सविमर्शं पश्यन्नास्त । सोऽमन्यत यद्यह मपि कश्चित्पक्षी भवेयं तर्हि ममाऽपि नूनं जीवितं सुखमयं स्यादिति ।

निजतपःफलतया तस्याभीप्सितं समनन्तरमेव सिद्धमासीत् । स कश्चि-चटकोऽभवत्; कयाचित् चटकांगनया साकं सानन्दं ससंभ्रमं च उड्डीय विहाय-सा गतः ।

  

तौ चटकदम्पती कुलायस्थेभ्यः शिशुभ्यः क्षुद्रान् कीटकान् संचित्य संचित्य ददतौ स्वार्थमपि आहारं सम्पादयन्तौ कतिपयदिवसान् जीवितं यापयतः स्म । सत्येवं, कदाचित् चटकः कुलायं न प्रत्यागतः । अन्यया कयाचित् प्रियतमया चटकाङ्गनया सह संगम्योत्पत्य क्वापि गतः स चटकः ।

  

वराकोऽयं चटकः मानवीयं स्वभावं चरितं च मद्विषये प्रादर्शयत् - इति सनिर्वेदं चुक्रोश सा चटका ।

कतिपयदिवसेभ्यः परं कस्मिंश्चिद्दिने प्रभाते ऋषिचटकः स्वपुरातनीं प्रेयसीं प्रत्यागतः । कस्यचिद्वृक्षस्य शाखायां उपविष्टायाः चटकाङ्गनायाः समीपे प्रथमं किञ्चिद्व्यवधानेन उपविश्य पश्चात् शनैः शनैः तस्या निकटमुपससार ।

"किच-किच, किच-किच—कृपया किंचिद्दूरे तिष्ठ । माऽगच्छ मत्सकाशं" इत्याह चटकाङ्गना ।

"किच-किच, कुतस्त्वमेवं ब्रूषे"-इत्यपृच्छत्स ऋषिचटकः । "वस्तुतस्त्वं पक्षी नैव । यदि त्वं नूनं पक्षी चटकश्चाऽसि तर्हि किंमर्थं वा मां च मे शिशूंश्च युगपदुत्सृज्य अन्यां काञ्चिदनुगतोऽभवः ?" इति प्रत्यपृच्छत्सा ।

लज्जितश्चटकः ततः काप्यगादपुनरागमनाय ।

  

उत्पत्य विहायसा गतस्स चटकः कस्मिंश्चिद्वृक्षाग्रे एकाकितामनुभवन्नुपविष्टः । तत्र कश्चिन्मार्जालः कुञ्चितगात्रः शनैश्शनैश्चटकमुपससार ।

चटकः त्रस्तमनाः त्रस्तस्तरसा उत्पत्य प्राणभीत्याऽन्तेऽधस्तान्निपपात । तस्यां द्रुतगतौ स प्राणैर्वियुक्तः । निर्जीवे पतति च तस्मिन् पतत्रिणि, प्राक्तनं ऋषिरूपं सम्प्राप्तम् । एवं पुनरेव च स ऋषिस्तत्रैव तपस्तप्तुमारेभे ।

मार्जारः शनैश्शनैस्तस्य ऋषेस्समीपं आगत्य आघ्रातुमुपचक्रमे । प्रायस्तस्मिन् पक्षिजन्मनो गन्धो वासना वा स्थिता स्यादिति मन्ये, अतस्स तथाऽकरोत् ।

ऋषिर्मार्जारं नैवामृशदस्पृशद्वा । सोऽपि मार्जारः तस्यैव पार्श्वे तपस्वीव निमीलितनेत्र आस्थितः ।

  

मानवः कुतो वा पक्षीव (ज्ञानी) सद्वृत्तो न भवति ? इति चिन्ताकुल एव स ऋषिस्तपस्तप्यन्नास्त ।

"न तत्सम्भवति" इत्याह मार्जारः; ऋषेर्भावं स कथञ्चित् अवजगामेव । "कुतस्त्वमेवं ब्रवीषि" - इत्याह ऋषिः ।

"म्यावू - म्याव् , स्वभावो हि दुरतिक्रमः । न कोऽपि तां प्रकृतिजां शक्तिमतिक्रम्य चरितुं प्रभवति । अहमपि तावत् सद्भावं-साधुभावं आकांक्षमाणः प्रयते; तथापि पक्षी मूषिको वा यदि दृश्येत समनन्तरमेव सर्वं विस्मरामि । तद्वदेव युष्मज्जातिस्वाभावोऽपि । मानुषे जन्मनि विशिष्य पुरुषाणां मनांस्यस्थिराणि । वयं मार्जारा अपि अस्मिन् विषये युष्मादृशा एव स्मः " - इत्याह मार्जारः ।

ऋषेर्लज्जाभरः प्रवृद्धः ।

इमं नवं परिभवमसहमानोऽब्रवीदृषिः — "कृपयाऽन्यत्रापसर, तपश्चरितव्य" मिति ।

म्यावू - म्याव्' तदेतदिदमदो यच्च किञ्चित् सारंसारं चञ्चलेन मनसा भवान् किं वा तपस्तप्स्यति ? - इति ब्रुवन्नेव स मार्जारः स्वभागं गतो द्रुतः ।

  

देवी साक्षात्कृत्य ऋषिं प्रत्याह - वत्स ! आशास्ते न पूरिताः, ममता न दूरीकृता । अपूर्णकामः अनिवृत्तमनोरथो भवेत् । अतस्त्वं संसारमेव संसर । तत्रैव त्वं सिद्धसंकल्पः पश्चात्तपश्चर, फलिष्यति - इति प्रबोधयामास ।

" न नास्ति कश्चिद्यो ह्यत्र संसरन् सिद्धिमेष्यति"



# सुमतिशतकम्

### श्री कुण्टिमद्दि शेषशर्मा

### सुमतिशतके प्रमादवशात् अमुद्रितोयम् श्लोकः

मूले मधुरोऽपीक्षुः प्रतिपर्व यथा कषायतां क्रमशः ।
आविष्करोति दुर्जनसहवासः परुषतां तथा सुमते ॥ ॥ १७ ॥

किञ्च ५३ तमे श्लोके "विधुहीननिशापि निष्षमं सुमते" इति भाव्यम् ॥

# संस्कृतांग्लभाषयोर्विशिष्टसाम्यम्

'साहित्यभूषणं' पडाल ब्रह्मारेड्डिः, कोंकुदुरु.
(पन्दलपाक द्वारा), पूर्वगोदावरीमण्डलम्.



यथा संस्कृतभाषाया भारतीयाधुनिकार्यभाषाः (हिन्दी, मराटी, गुजराती, बङ्गाली, राजस्थानी इत्यादिभाषाः) अजायन्त, तथैव लैटिनग्रीकभाषाभ्यां यूरोपीयाधुनिकभाषाः (आंग्ल, फ्रेञ्च, स्पानिश, डचेटलीयन् इत्यादिभाषाः) उत्पन्नाः । संस्कृभाषाप्रभावो भारतीयद्राविडभाषास्वपि (तेलुगु, तमिल, कन्नड, मलयालम् इत्यादिभाषास्वपि) अधिकरूपेण पतित इतिकृत्वा संस्कृतशब्दाः तत्सम-रूपैर्वा तद्भवरूपैर्वा द्राविडभाषासु प्राप्यन्ते । इत्थमेव लैटिनग्रीकभाषयोः शब्दा यूरोपीयांग्लाद्याधुनिकभाषासु अत्यन्ताधिकतयोपलभ्यन्ते । लैटिनभाषायाः पितर, माता, भ्रातर; ग्रीकभाषायाः पेटर, मेटर, फ्रेदर इत्यादिशब्देभ्यः आंग्लभाषायाः फादर्, मदर्, ब्रदर्, इत्यादिशब्दा उत्पन्नाः । उपर्युक्तलैटिनग्रीकभाषायाः शब्दाः संस्कृते पितृ, मातृ भ्रातृ; रूपैर्विराजन्ते । संस्कृतमिव यूरोपीयलैटिनग्रीकभाषे प्राचीनतमे इति भाषावैज्ञानिकानामभिप्रायः । परन्तु मन्येऽहं यद् लैटिनग्रीक-भाषापेक्षया संस्कृतभाषैवाधिकप्राचीनतमेति । किमर्थमित्युक्ते निखिले विश्वे प्रथमः प्राचीनतमश्च ग्रन्थः ऋग्वेद एव । ऋग्वेदस्तु वैदिकसंस्कृतभाषायामेव विराजते ।

संस्कृतभाषाया लैटिनग्रीकभाषयोरनेकशब्दाः समाना इत्याद्याधारेण तासां घनिष्ठसम्बन्धो वा उत्पत्त्यैक्यं वा आसीदिति मन्यामहे । तासां भाषाणां ध्वनि-व्याकरणादिष्वपि साम्यं सम्यगुपलभ्यते । यदि गैर्वाण्याः कश्चिद् लैटिनग्रीक-भाषाभिज्ञः पाठको वर्तते तर्हि कृपया तत्प्रकटनार्थं संस्कृतलैटिनग्रीकभाषासाम्य-मधिकृत्य लिखितुमर्हति, यतोऽहं लैटिनग्रीकभाषयोरप्राज्ञः ।

इदानीमपि लैटिनग्रीकभाषाभ्यामुत्पन्नाया आंग्लभाषायाः कतीनां चनशब्दानां संस्कृतभाषायाः शब्दानाञ्च विशिष्टसाम्यमस्माभिरवलोक्यते । ध्वनिव्याकरण-

साम्यमपि अल्पतया वाधिकतया वा लभ्यते । आंग्लभाषायां आवश्यकतानुसारं नवीनशब्दानां कल्पनमपि प्रभूततया अभूत् ।

अहं गैर्वाण्या एप्रिलमेजूनमासानामङ्के 'संस्कृतरष्यन् भाषयोः समानता' इति लेखे एवावदम् यद् भाषाणामैतिहासिकसम्बन्धस्थापनार्थंप द्वयोर्भाषयोः शब्देषु सारूप्यं (तद्रूप्यम्) नापेक्षितम्, प्रत्युत साम्यमेवापेक्षितमिति । कुत इति चेत् आवश्यकतानुसारं कोऽपि भाषाभाषी अन्यभाषाया अपरिवर्तितशब्दान् स्वमातृभषायां व्यवहरति । उदाहरणाय तु वयमद्य अस्मद्भारतीयभाषासु मध्ये आंग्लशब्दान् मेलयामः । तादृशशब्दा एव सरूपा भवन्ति । कुमार, कुटि, पक्षी, घोटक, गर्दभ, काक, मूलं इत्यादि संस्कृततत्समशब्दानाधारीकृत्य संस्कृत-तेलुगुभाषयोः सम्बन्धं न साधयामः । प्रत्युत कोडुकु, गुडि, पिट्ट, गुर्रमु, गाडिद, काकि, मोदलु इत्यादिशब्दानामाधारेणैव । इत्थमेव हिन्दीभाषायामपि माँ-माता, भाई - भ्राता, घोडा - घोटकः, गधा - गर्दभः, बाघ - व्याघ्रः इत्यादिसामानार्थक-तद्भवतत्समशब्दान् व्यावहरन्ति । परन्तु प्रथमतः निर्दिष्टैः माँ, भाई, इत्यादि-साम्यशब्दैरेव हिन्दी संस्कृतभाषोदरादुत्पन्नेति निर्णीतम् । अतः प्रस्तुतसम्बन्ध-स्थापनाय तद्रूपशब्दा (Pandit, Rushi, Shanti इत्यादि) अनावश्यका एव ।

वैदिकसमये प्रचलितसंस्कृतशब्दानां रूपं ईषत्परिवर्तितं भूत्वा आंग्ल-भाषायामद्य वर्तते । अतः तत्साम्यमेवाऽत्र ईषद् विवृणोमि ।

## १. संज्ञाशब्दानां साम्यम्

| संस्कृतम् | आंग्लभाषा |
|---|---|
| वारि | वाटर् Water |
| घृतं | घी Ghee |
| पृथ्वी | फ्लोर् Floor |
| इला | लाण्ड् Land |
| अग्नि (सम्बन्धी) | इग्निअस् Ignious |
| देवता, देवत्वं | डिविनिटी Divinity |

| संस्कृतम् | आंग्लभाषा |
|---|---|
| सूर्यः | सन् Sun |
| चन्द्रमाः | मून् Moon |
| तारा | स्टार् Star |
| वीरः | हीरो Hero |
| विधवा | विडो Widow |
| इतिहासः | हिस्टरी History |
| गौः | कौ Crow |
| ज्ञानम् | सेन्स् Sense |
| तरुः | ट्री Tree |
| श्रीः | सर् Sir |
| मनुष्यः | मेन् Man |
| पुरुषः | पर्सन् Person |
| नाम | नेम् Name |
| सर्पः | सर्पेण्ट् Serpent |
| युवकः | यङ्ग् Young |
| काकः | को Crow |
| मांसः | मीट् Meat |
| मिलनम् | मीट् Meet |
| पन्थाः | पाथ् Path |
| जन्म | जेनिसिस् Genesis |

२. बन्धुवर्गीयशब्दानां साम्यम्

| | |
|---|---|
| पितृ | फादर् Father |
| मातृ | मदर् Mother |
| भ्रातृ | ब्रदर् Brother |
| सहोदरी | सिस्टर् Sister |
| वामा (भामा) | वैफ् Wife |
| दुहिता | डाटर् Daughter |
| सूनुः | सन् Son |

## ३. सर्वनामशब्दानां साम्यम्

| संस्कृतम् | आंग्लभाषा |
|---|---|
| अहं | आँय् I |
| मां | मि Me |
| मम | माँय् My |
| वयं | वुय् We |
| अस्मान् | अज् Us |
| यूयं | यू You |
| सा, एषा | षी She |
| तत् | दि That |

## ४. संख्यावाचकशब्दानां साम्यम्

| | |
|---|---|
| द्वे | टू Two |
| त्रीणि | त्री Three |
| पञ्च | फाँइव् Fire |
| षष्ट | सिकस् Six |
| सप्त | सेवेन् Seven |
| अष्ट | ऐट् Eight |
| नव | नाँइन् Nine |
| सप्त | हेप्ता Hepta |
| पञ्च | पेन्ट Penta |

## ५. उपसर्गाव्ययविशेषणानां साम्यम्

| | |
|---|---|
| अधः | अण्डर् Under |
| उपरि | अप् Up |
| उपरि | ओवर् Over |

| संस्कृतम् | आंग्लभाषा |
|---|---|
| अन्तर् | इण्टर् Inter |
| सु | सुपर् Super |
| अति | आँउट् Out |
| निः, निर् | नाँन् Noon |
| न (नञ्) | अन्, इन् Un, In |
| न, नहि | नो, नाँइ, ने No, Not, Nay |
| मध्य | मिड् Mid |
| नव | न्यू, नीओ New, Neo |
| नवीन | नवल् Novel |

६. विस्मयाद्यव्ययानां साम्यम्

| | |
|---|---|
| अहो | हे, हो Heigh-ho |
| अहा, अहो | हा, हो Ha, Ho |
| म्याऊ | म्यू Mew (बिडालस्यारावः) |

७. कालवाचकशब्दानां साम्यम्

| | |
|---|---|
| दिन | डे Day |
| नक्तं | नैट् Night |
| मासः | मन्थ् Month |

८. प्राण्यङ्गशब्दानां साम्यम्

| | |
|---|---|
| मुख | मौत् Mouth |
| नखः | नेल् Nail |
| पादः | फुट् Foot |
| अङ्गुलिः | फिङ्गर् Finger |
| हस्तः | हेण्ड् Hand |
| नासिका | नोस् Nose |



## शिवभक्तेषु अग्रगण्यानां श्री माणिक्यवाचकमहोदयानां वदनारविन्दविनिर्गतं तमिल् भाषायां रचितं ग्रन्थरत्नम् ।

# " तिरुवेंपावै "



[ सहृदयेभ्यः इदं निवेद्यते यद् संस्कृतसागरात् अमृतं गृहीत्वा वर्षद्भ्यः कवि-जलदेभ्यः सुपूरितस्वरूपाः देशभाषानद्यः स्वपतिमेव प्राप्तुमर्हा इति । देशभाषाप्रपंचेपि अनितरदुर्लभा उक्तिविशेषा वैचित्रीसमुत्कर्षा गभीरतमार्थाश्च दरीदृश्यन्ते । किन्तु देश-भाषाणां भिन्नत्वात् तत्तन्मात्रपरिचयवद्भिः सहृदयैः अन्यदीया वाङ्मयसुधा अननुभाव्या भवति । अतः संस्कृतमध्यमतया तत्तद्विशिष्टकृतीनां प्रकाशने समेषां भारतीयानां तथैव संस्कृतज्ञानां खण्डान्तरगानां च महते उपयोगाय कल्पेतेति भावयतामस्माकं संकल्पं द्वितीयोप्यद्वितीयत्वेन सफलयति मन्मित्रं पावैप्रवचनभूषणम् ताताचार्यविद्वत्वकविः ।

**सम्पादकः ]**

**अनुवादकः —**

"पावैप्रवचनभूषणम्" शिरोमणिः, हिंदी प्रचारकः

**एन्. एस्. ताताचार्यः**, तंजापुरम्.

---

मधुरापुरनेतारं वचनामृतसागरम् ।
नटराजसभादीपं मणिवाचकमाश्रये ॥

शैवागमगुहागूढतत्वरत्नप्रकाशिका ।
मणिवाचकवाग्ज्योतिः साधूनां चन्द्रिकायते ॥

श्रीकामकोटिपीठेशं श्रीविद्यादर्शनोज्ज्वलम् ।
भजते भाग्यवान् भक्त्या श्रीकरं चन्द्रशेखरम् ॥

मन्दस्मेरान् मधुरवचनान् मोहनोदारनेत्रान्
आत्मारामान् अनघचरितान् सर्वलोकाभिवन्द्यान् ।
नित्यं पार्श्वे नवयुवतिभिः संश्रितान् भाग्यलभ्यान्
मन्दाक्रान्ताविनतकविता ममिका तान् वृणीते ॥

१

( इत आरभ्य स्नानार्थं बहिः प्रस्थिताः बलिकाः स्वसखीः प्रबोधयन्ति )

श्रुत्वाप्यद्य नतासि दीर्घनयने ! सञ्जातमस्मन्मुखात् ,
गीतं यस्य दुरासदस्य सततं ज्योतिस्स्वरूपस्य तत् ।
निद्रामुद्रितलोचने ! किमिव ते श्रोत्रद्वयं दुर्भरम् ?
वीर्यद्योतकपादबद्धकळळित्याख्यातभूषावतः ॥ ॥ १ ॥

मार्गोदञ्चितवैभवं श्रुतिसुखं श्रुत्वैव सौभाग्यतः,
पर्यङ्काङ्कगता सगद्गदरुता गौरीपतेः प्रेयसी ।
किं सा ताम्यति ? हा विचित्रमधुना ! स्वात्मन्यनीशा सती
केयं रीतिरिहानया परिचिता ? कात्यायनी सुव्रते ॥ ॥ २ ॥

२

( पूर्वं प्रबुद्धाः बालिकाः पूर्वप्रबोधितां सखीं आनयन्त्यः अपरां सखीमुद्बोधयन्ति )

नानाभूषणभूषिते ! क नु गतं त्वद्भाषितं घोषितम् ?
पूर्णज्योतिषि मामकं मन इति स्निग्धासु नक्तंदिवम् ।
विस्मृत्याभरणांचिते ! किमु वचस्तल्पप्रसूनायसे
धिग् धिग् ! भामिनि ! किं विजल्पसि ! मिथो नायं क्षणो निंदितुं ॥३॥

स्तोतुं यस्य पदाम्बुजं पदमहो ! नाकौकसां नाभवत् ,
दातुं स प्रथितौ स्वकीयचरणावस्मकमुत्कण्ठते ।
स्निग्धसाधुषु "तिल्लै अम्बल" महानाट्यप्रियंभावुक-
स्तिष्ठत्येव समक्षमद्भुतमहो ! कात्यायनीसुव्रते ! ॥ ॥ ४ ॥

( सशेषम् )

॥ श्रीहस्तिशैलशिखरोज्ज्वलपारिजाताय नमः ॥



# व्यासवाल्मीकिसंवादः



★

महाविद्वान्,

श्री काञ्ची. प्रतिवादि भयङ्कर अण्णङ्गराचार्यस्वामी



**व्यासवाल्मीकिसंवादापदेशेन रमापतेः ।**
**कल्याणगुणपाथोधौ पिबामि लघुशीकरान् ॥**

**व्यासः**— भगवन् वाल्मीके महर्षे! अहमिह प्रणमामि व्यासनामा। तत्र भवान् श्रीरामायणाख्यमेकमेव प्रबन्धं निर्ममे; अहं तु "अष्टादशपुराणानां कर्ता सत्यवतीसुतः" इत्युक्तरीत्या बहुपुराणप्रणेताऽस्मि। तथाऽपि भवदीय श्रीरामायणस्यैव निस्समाभ्यधिकमुत्कर्षं कृत्स्नेऽपि जगति प्रथमानं पश्यामि। येन केनापि विदुषा मदीयपुराणप्रवचनं प्रक्रान्तं चेत् तत्र द्वित्राः पञ्चषा वा श्रोतारस्संमिलन्ति; भवदीयस्येतिहासरत्नस्य प्रवचने प्रारब्धे तु प्रवचनकर्तुर्मितमतित्वेऽपि श्रोतारस्संघशः समायान्ति। को विशेषो भवदीयग्रन्थ इति भवद्वाचैव शुश्रूषमाणस्समागतोऽस्म्यद्य। कृपया प्रब्रवीतु भवान्।

**वाल्मीकिः**— "कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम्। को ह्यन्यो भुवि मैत्रेय! महाभारतकृद्भवेत्। तेन व्यस्ता यथा वेदा मत्पुत्रेण महात्मना" [वि. पु. ३-४-५] इति स्वपितृचरणैरेव प्रशंसितप्रभावो हि तत्रभवान्। भवतः प्रभावे खलु कृत्स्नं जगद्विस्मयस्तिमितिमास्ते। मयि मत्प्रबन्धे वा को नामास्त्यतिशयः? वस्तुतो यद्यस्ति, तर्हि "पुण्यैर्यशो लभ्यते" इत्येवानुसंधेयं भवेत्।

**व्यासः**— मैवं वादीर्महर्षे!; अस्त्येव महान् प्रभावो भवत्प्रबन्धस्य श्रीरामायणस्य। तस्य नित्यपारायणनियतिस्वीकर्तारो बहवः सर्वत्रापि भुवो भागेषु श्रेयांसि भूयांसि प्राप्नुवन्तः श्रूयन्ते प्रेक्ष्यन्ते च। महाकवयोऽपि बहवो भवत्प्रबन्धं श्रीरामायणमुपजीव्यैव काव्यनाटकचम्पूप्रभृत्यनेकग्रन्थप्रणयनेन प्राप्तप्रतिष्ठाः प्रेक्ष्यन्ते। उत्तरभारते तुलसीदासनामा परमभक्तोऽपि रामायणग्रथनेनैव विसृत्वरविमलयशास्समभिन्धे। आन्ध्रपण्डितस्त्यागराजनामा परमभक्तोऽपि रामायणकीर्तनत एव गायकमण्डल्यामद्वितीयामविन्दत विख्यातिम्। द्राविडेषु कम्बनामा कवीश्वरोऽपि कम्बरामायणमिति विख्यातप्रबन्धविरचनेन विश्वप्रसृमरविपुलकीर्तिर्विराजते। किमेवं बहूदाहर्तव्यम्? विपुलायां विश्वंभरायाम् अङ्गवङ्गकलिङ्गकाम्भोजकाश्मीरकामरूपसौवीरसौराष्ट्रमगधमागधकेरलनेपालकर्णाटादिषु नानाजनपदेष्वपि रामायणं रामायणमित्येव रटन्ति पठन्ति च सर्वेऽपि। किं बहुना? "वेदवेद्ये परे पुंसि जाते दशरथात्मजे। वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना"। इत्येतदेकमेव खलु श्लोकरत्नं पर्याप्तं भावत्कप्रबन्धप्रभावप्रख्यापने।

**वाल्मीकिः**— आः पाराशर्य महात्मन्! किमुच्यते? "सहोवाच व्यासः पाराशर्यः" इति श्रुतिष्वपि हि प्रसिद्धो भावत्कः प्रभावः। न केवलमेतावदेव; "भारतः पञ्चमो वेदः" "वेदानध्यापयामास महाभारतपञ्चमान्" इत्यादिप्रमाणशतप्रथितप्रभावश्च भवदीयः प्रबन्धः। वृथा किमित्ययं जनः प्रशंसापदं क्रियते? नैवास्ति मयि काऽपि विशिष्टता।

**व्यासः**— सदाचार्यगोष्ठीषु परिग्रहातिशयप्रयुक्तमभ्यर्हितत्वं भवत्प्रबन्धस्यैव नान्यस्य कस्यापि। मन्त्रार्थादीनामिव भवत्प्रबन्धार्थानामपि सदाचार्यसकाशादेव ग्रहणनैयत्यं चिरानुवृत्तमाकर्ण्यते। स भगवान् रामानुजो भाष्यकारोऽपि संवत्सरमेकमाचार्यकुलमध्युष्य भवत्प्रबन्धगताननर्घानर्थानश्रौषीदिति प्रथा वरीवर्ति। स्वादिष्ठानि व्याख्यानानि भूयांसि भवत्प्रबन्धस्यैवावतीर्णानीति, भवत्प्रबन्धगतश्लोकरत्नसदर्थोपन्यासैरेव सभासु रसिका रज्यन्त इति च प्रसिद्धिः पारमार्थिकी श्रूयते। न कोऽपि प्रभावो मत्प्रबन्धस्येति निह्नवो मा भूत्।

**वाल्मीकिः**— अस्तु तावत्; मत्प्रबन्धे महानुच्छ्रायो वर्तत इति यदि तत्रभवान्मन्यते, अस्तु नाम कामं तथा। 'तव पुत्रस्सुन्दर' इति केन-

चिदुक्ते पिता यथा प्रहृष्यति, तथाऽहमपि प्रहृष्यामि । वस्तुतो मत्प्रबन्धस्योत्कर्षो न मन्निर्मितत्वप्रयुक्तः; कथानायको रामचन्द्रस्समभूदित्यनेनैव हेतुना स इति प्रतिपद्यतां तत्रभवान् । असौ खलु निन्दितुमुद्युक्तानां मुखतोऽपि स्तुतिवचांस्येव प्रादुर्भावयति । वस्तुतो "धातूनामिव शैलेन्द्रो गुणानामाकरो महान् ह्यसौ" ।

**व्यासः**— अत एव केनचिन्महाकविना प्रोक्तं प्रथते "यदि क्षुण्णं पूर्वैरिति जहति रामस्य चरितं गुणैरेतावद्भिर्जगति पुनरन्यो जयति कः ?" इति । "बहुभिः कविभिर्ग्रथितं श्रीरामचरितमिति हेतुना तदुत्सृज्य नन्दनन्दनादेरन्यस्य कस्यापि चरितं ग्रथितुमौत्सुक्यं जायते मम; परंतु एतावद्भिर्गुणैरभिरामः कश्चिदन्यः पुमानस्ति चेत्कामं तच्चरितग्रथनं संभवेन्नाम; न कोऽपि ह्यस्त्येतादृक्" इति सुधीरं खल्वाह कविवरोऽसौ । अन्योऽपि कोऽपि कवितल्लजः प्राह "स्वसूक्तीनां पात्रं रघुतिलकमेकं कलयतां कवीनां को दोषस्तु गुणगणानामवगुणः । यदेतैर्निश्शेषैरपरगुणलुब्धैरिव जगत्यसावेकश्चक्रे सततसुखसंवासवसतिः" इति । श्लोकस्यास्य हृद्यमर्थं भवान् प्रवक्तु; अहं श्रोतुकामोऽस्मि । श्रीरामगुणविद्धो भवानेव खलु ।

**वाल्मीकिः**— यथानियोगमहमेव प्रवच्मि; महानगरीयासु विपणिषु भूयस्यस्सन्ति निषद्याः; किं तास्सर्वा एकविधा एव भवन्ति ? क्रय्याणामुच्चावचानां पण्यानां विक्रयणं नैक एव करोत्यापणिकः; भिन्नभिन्नानि पण्यानि भिन्नभिन्नैरापणिकैर्विक्रीयन्त इति पश्यामः । एवं कैश्चन कविभी रामकथाग्रथनतत्परैः, अन्यैः कृष्णकथोपवर्णनव्यापृतैः, अपरैर्नृसिंहचरितवर्णनकुतूहलिभिः इत्थं भिन्नभिन्नभगवदवतारचरितग्रथनपरैर्भवितव्यं तैस्तैः कविभिः । परं तु नैवमभूयत । प्रायस्सर्वैरपि कविवरैः श्रीराघवचरितोपवर्णनमात्रलम्पटैरभावि; तदेतदमीषामवद्यं खलु ? इत्याशङ्क्य "स तु गुणगणानामवगुणः" इति गुणानामेवैष दोष इति समाधीयते । उत्तरार्धेन तद्विवरणमातन्यते [यदेतैर्निश्शेषैरपरगुणलुब्धैरिव जगत्यसावेकश्चक्रे सततसुखसंवासवसतिः] दयाक्षान्त्यौदार्यसौशील्यसौलभ्यवात्सल्यशौर्यवीर्यपराक्रमादयस्सर्वेऽपि गुणाः कदाचित्सभां संमेल्य प्रास्तुवन्नेवम्; 'अस्माभिर्विभिन्नाधिकरणवर्तिभिर्न भवितव्यम्; सर्वथाऽपि सामानाधिकरण्येनैव जीवितव्यमस्माभिः । तथासत्येवास्माकमप्रतिमं गौरवमुपजायेत; महाकविरपि

कश्चित्प्राह "धन्यानि स्थलवैभवेन कतिचिद्वस्तूनि, कस्तूरिकां नेपालक्षितिपाल-फालपतिते पङ्के न शङ्केत कः?" इति। एवमस्माकमाश्रयभूतस्सन् गौरवा-पादको व्यक्तिविशेषः को नाम भवितुं प्रभवतीति। अथ सर्वैरपि च गुणगणै-स्समकण्ठमभ्यधायि - तादृशी व्यक्तिस्सत्यमेकैव श्रीरामचन्द्रमूर्तिरिति। ततश्च सर्वेऽपि गुणास्तत्रैव संगम्य सामानाधिकरण्यसुखमनुभूय प्रहृष्यन्ति। अन्यासां व्यक्तीनां गुणैरुत्कर्षः; अत्र तावन्न तथा; गुणानामेतदाश्रयणेन समुत्कर्षः। (श्लोकेऽस्मिन् 'चक्रे'इत्येतत् कर्मणि लिटि रूपम्, न तु कर्तरि)।

व्यासः – सत्यमुक्तम्, सुष्ठूक्तम्; सुचारुतरमुक्तम्। श्रीराघव एक एव सकलगुणगणाभिराम इति मत्सरिभिरप्यभ्युपेयमेतत्। एतावता कृष्णा-दयो मूर्तिविशेषा गुणहीना इति नोक्तं भवेत; "गगनं गगनाकार"मित्युक्ते "सागरस्सागरोपम" इत्यप्युक्तिरुत्थितैव ननु। अस्तु। श्रीरामचन्द्रगुणामृत-सागरशीकरान् कतिपयानद्य भवतो मुखादास्वादयितुमागतोऽस्म्यहम्। विरामश्चे-दनुग्राह्योऽयं जनः।

वाल्मीकिः– विरामश्चेदिति हन्त! केयं वाणी? किं वयं संसा-रिणः? किमस्त्यस्माकं लौकिकव्यासङ्गः? "एकस्मिन्नप्यतिक्रान्ते मुहूर्ते ध्यान-वर्जिते। दस्युभिर्मुषितेनेव युक्तमाक्रन्दितुं नृणाम्"। "यन्मुहूर्तं क्षणं वाऽपि वासुदेवो न चिन्त्यते। सा हानिस्तन्महच्छिद्रं सा भ्रान्तिस्सा च विक्रिया"। इति सुदृढमभ्यवस्यतामस्माकमहह! का पुनरन्याऽस्ति व्यापृतिः? देहधारणमात्म-धारणं चेत्युभयमपि भगवद्गुणगणसुधास्वादनत एवेति तस्थुषामस्माकम् अमृत-सागरान्तर्निमग्नसर्वावयवतात्मकं माहात्म्यमुपनमति चेत किमितोऽन्यदस्ति कांक्ष-णीयं नाम?

व्यासः– अमृतकल्पैर्वचनैर्भवदीयैरतीव प्रहृष्यामि। श्रीरामविषये मितमतिभिरुपन्यस्यमानानि चोद्यान्युपक्षिपाम्येकैकशः; नैतानि चोद्यानि मदुपज्ञानि विभाव्यानि। भवन्मुखात्संप्रतिपन्नसमाहितिसमाकर्णनसमुत्सुक एव सन् उपक्षि-पामि तानि।

[ क्रमशः ]

# इन्दुमतीस्वयंवरम्

## [रचयिता - श्री पि. एम्. पद्मनाभशर्मा]

[ महदिदं प्रमोदस्थानं यत् गैर्वाण्यां प्रकाशनाय नवीनानि प्रदर्शनयोग्यानि नाटकान्यपि सहृदयैः समर्प्यन्ते । अधुनापि रचयितॄणां पठितॄणां च संस्कृतवाङ्मये न दौर्लभ्यं, अपि तु प्रभुताया जनतायाश्च प्रोत्साहनशैथिल्यमेव प्रतिपदं प्रचारं अवष्टंभयति ।

श्री पद्मनाभशर्मा अयं महोदयः बालोपयोगितया प्रदर्शनानुगुणतया च सुललितं अद्भुतं चेदमिन्दुमतीस्वयंवरं निर्माय गैर्वाणीभूषणाय उपाहरत् । मन्ये एष कवि-पण्डितः अन्यानपि लेखान् समये संप्रेष्य गैर्वाणवाणीमर्चयेदिति ।

**सम्पादकः ]**

**लक्ष्मीः क्षीरसमुद्रजा विधिमुखैर्वृन्दारकैस्सादरम्**
**मह्यं मह्यमिति प्रसार्य च करौ संप्रार्थ्यमानापि सा ।**
**दृष्ट्याकुञ्चितया यमेव पुरुषं प्रत्यग्रहीत् सस्मितम्**
**कल्याणं तनुतां स एव भगवान् श्रीपद्मनाभो हरिः ॥**

[ नान्द्यन्ते सूत्रधारः ]

**अलमतिविस्तरेण ।** अयि भो महनीयचरितानां **मुद्दुस्वामिआर्याणां-श्री लक्ष्मीसंस्कृतकलाशाला प्रतिष्ठापनदिनमहोत्सवप्रसङ्गेन सामवेताः समाजिकाः, आर्यमिश्रान् किञ्चिदिव** विज्ञापयितुमिच्छामि ।

अस्ति नवसालपुरी (पुदुक्कोट्टै) नाम नगरी । तत्र लब्धजन्मा सर्वभाषा-कुशलः पद्मनाभो नाम बालकविः ।

**रामचन्द्र इति ख्यातः दीक्षितेन्द्रस्स यद्गुरुः ।**
**मुद्दुस्वाम्यार्यवर्याणामधमर्णश्च यः कविः ॥**

तेन विरचितमिन्दुमतीस्वयंवरं नाम रूपकम्, मम हस्ते समर्पितं च सभारञ्जकमिति । तत् कस्यां भाषायामभिनेतव्यमिति ज्ञातुमभिलषामि" इति ।

[ प्रविश्य ]

पारिपार्श्विकः – भाव, आज्ञापयति सभापतिः ।

सूत्रधारः – [ ससंभ्रमम् ] किमिति ?

[पारिपार्श्विकः पत्रं ददाति]

सूत्रधारः – [तत् गृहीत्वा वाचयति]

"आज्ञापयति सभापतिः —

**या भाषा सर्वभाषाणां रत्नमित्यभिधीयते ।**
**यन्माधुर्यसमा नास्ति तस्यां रूपकमिष्यते ।। इति" ।**

पारि – [सभ्रूभङ्गम्] भाव, कोऽयमपूर्वार्थप्रश्नः ?

सूत्र – भोः, सुप्रसिद्धमेतत् संस्कृतभाषा सर्वभाषामूर्धन्यभूता इति । तत् कथमपूर्वार्थप्रश्नः ?

पारि – भाव, ज्ञातं, ज्ञातम् । अज्ञानात तत्सर्वं विस्मृतं मया । [विचिन्त्य, सश्लाघम्] भाव, श्रेष्ठस्य वस्तुनः परिवेषणं यदा सभापतेः संजातं तदा ज्ञायते गुणग्राही सभापतिरिति ।

सूत्र – भोः किमुच्यते ? वंशसिद्धमेतत तेषां गुणग्राहित्वम् ।

पारि – भाव, अन्यास्वपि भाषासु विद्यमानासु किमिति संस्कृतभाषायामेवाभिनिवेशः सभापतेः ?

सूत्र – पारिपार्श्विक,

**रमणीये पदार्थे हि भावः सर्वेण रच्यते ।**
**यथेन्दुमत्यां वैदर्भ्यां अजेन रघुसूनुना ।।**

[ इति निष्क्रान्तौ ]

[ इति प्रस्तावना ]

[क्रमशः]

# विज्ञान वैदिक

## भारतीयो विज्ञानवादः

**लेखकः – लोकमिश्रशास्त्री,**
**गुरुकुल, फैजाबाद, अयोध्या.**

[ विज्ञानविषये भारतीयानां समुचितं स्थानं नास्तीति बहवो भ्राम्यन्ति । स्वीयं भ्रमं अवष्टभ्य च भारतदूषणं अभारतभूषणं च ते कुर्वन्ति । नैव तेषां दोषः, अपि तु नवीनदृष्ट्या प्राचीनविषयान् अप्रकाशितवतामस्माकमेव सः । अयोध्यागुरुकुलवासी पण्डितवरः श्री लोकमिश्रशास्त्री तं लोपमपाकर्तुं अमुं लेखं प्रकाशयति । विविधविज्ञानानां विषये वेदवाङ्मयस्य कीदृशो दृष्टिः आसीत् ? इति लेखकः अत्र प्रतिपादयति ।

**सम्पादकः** ]

### परिभाषा

किमिदं विज्ञानं नाम येन सर्वं वै जगत, रभसाकृष्टमिति जिज्ञासायां तदुच्यते, "कस्यापि पदार्थस्य सावयवं सूक्ष्मातिसूक्ष्मं व्यवस्थितं क्रमबद्धं शास्त्रीयपद्धत्या वैशिष्ट्येन ज्ञानप्राप्तिः विज्ञानमिति" । तद्यथा तमोघ्नीं दृष्ट्वा सामान्यज्वलनप्रकारकज्ञानानन्तरं कथं तैलमुपरि गच्छति ? कथं तावत् प्रकाशः संस्तब्धः शीशकेनाच्छादितः सन्नपि नोपशाम्यति ? तैलं क्व विलीनं भवति ? इत्यादि तर्कणयाऽवगतं ज्ञानं विज्ञानकोटौ समायाति ।

भारतीय भौतिकाध्यात्मिकादिसर्वविधविज्ञानस्योद्भवस्थलं वेद एव । तत एवायुर्वेदधनुर्वेदगान्धर्ववेदादिरूपैः प्रवहन्तीयं विज्ञानधारा शाखाप्रशाखासु विभक्ता । तदुक्तं महाभाष्ये "....चत्वारो वेदाः साङ्गाः सरहस्या बहुधा भिन्ना एकशतमध्वर्युशाखा सहस्रवर्त्मा सामवेदः एकविंशतिधा बाह्वृच्यं नवधाथर्वणो वेदः" इति । प्रागैतिहासिककालिकानीमानि प्रमाणानि दौर्भाग्यात् कालकवलीकृतानि । तथाप्यवशिष्टैरेव प्रमाणैः भातीय विज्ञानवादस्य मूलं उपलक्षितुं शक्यते । दृश्यताम् तावत् वेदे भौगोलिकं विज्ञानं मन्त्रेष्वादित एव ।

( सशेषः )




उपन्यासकः – भोः ! मन्येऽहं यत्सर्वे भवन्तः इदानीं वक्ष्यमाणां शीर्षिकामधिकृत्य जानन्तीति ।

केचित् – आम् ! जानीमः ।

उप० – अतः वक्तव्यं नास्ति किञ्चिदपि ।

केचित् – वयं न जानीमः ।

उप० – अज्ञातॄणां वक्तव्यमेव नास्ति । बधिराः शङ्खध्वनिमिव न जानन्ति ते अज्ञातारः ।

इतरे – केचन जानन्ति, केचिन्न जानन्ति ।

अप० – तर्हि ज्ञातारः अज्ञातॄन् कथयन्तु ।

  

उपाध्यायः – राम ! दुरालोचनायाः दूरालोचनायाश्च को भेदः ?

राम – दीर्घ एव ।

  

पथिकः – भोः ! एष पन्थाः कुत्र गच्छति ?

वृद्धः – पश्याम्यहं पञ्चदशवर्षेभ्यः । एष अत्रैवास्ति । कुत्रापि न गतः ।

**मा. शिवरामराजः.**

——:o:——

काली – वत्स, प्रसन्नास्मि ते । किं वांछसि ? पृच्छ ।

तेन्नालिरामः – देवि, यदि ते कोपो न भवेत् किंचित् पृच्छामि ।

काली – यथेच्छां पृच्छ ।

तेन्नालिराम – मातः, अस्मिन् शीतकाले जलदोषेण अस्मदादीनां एकस्या नासिकायाः एव शोधनं दुर्घटं भवति । भवती तु बहुमुखी कथं सिंघाणमपनुदतीति मे मनसि महती विचिकित्सा वर्तते ।

काली – अरे, अस्थानपरिहासिन्, त्वं इतःप्रभृति विकटकविर्भव ।

# The Samskrita Bhasha Pracharini Sabha,

CHITTOOR.

## SECRETARY'S REPORT



I have great pleasure in presenting the report of the progress of the Sabha on the eve of the Eighteenth year Celebrations.

Last year the Annual Day Celebrations were held in this premises on 22—6—63. Sri C. Venkataramana-Iyer, Advocate, Chittoor presided over the function. The president in his speech exhorted everyone to learn Sanskrit and paid tributes to the unassuming work turned out by the Sabha. There was also an entertainment by the actors of the Vani Nataka Kala Samiti. Cuddapah, who enacted two scenes from Kalidasa's Sakuntalam.

During the past year we had number of meetings of the Working Committee and other meetings and also celebrated important Jayanthis. We celebrated Sri Madhwa Jayanthi on 16—[illegible]—64, Sri Ramanuja Jayanthi on 17—4—64, Sri Valmiki Jayanthi on 20—4—64, and Sri Sankara Jayanthi on 16–5–64. Sri Vyasa Jayanthi was celebrated on 24—7—64, Sri Vinayaka Chathurthi on 9—9—64 and Sri Kalidasa Jayanthi on 15—10—64. A new feature which was introduced during this period is the celebration of the Sabha's birth day on 5—9—64. Sri G.S.N.Acharya M.A.,B.Ed., Principal of the local Arts College presided over the function.

Similar meetings and Jayanthis were celebrated in our Branches at Madras, Nagapattanam, Madura, Trichy Coimbatore, Guntur, Masulipatam, Kuchipudi and Hyderabad.

In this connection we are glad to announce that last year a new Branch of this Sabha was started in

Ceylon. Sri K. Subrahmaniya Sastri who conducts the class there, was honoured by the Sabha when he came here recently.

Our Library and Reading Room have been improved very much. With the aid of the grant of Rs.1200/ by the Central Government and Rs 800/- contributed by the Sabha, number of new books were purchased for the library. The Andhra Pradesh Central Library Authority have sanctioned a sum of Rs. 150/-and contributing a similar amount, we have purchased some more books for the library. Now there are more than 3500 books in our library purchased by the grants and also gifted by some gentlemen to the library. Our ultimate aim is to make this a central model library for books on Sanskrit literature and our culture.

The Reading Room is opened to the public. We are getting two dailies, 4 weeklies, 2 monthlies, and one quarterly journal for the library.

Our heartfelt thanks are due to the authorities of the Panchayat Library of Vediyangadu for the presentation of nearly 100 books to our library.

We have also purchased furniture with the aid of Rs. 300/- sanctioned by the Central Govt., and an amount of Rs. 500/- contributed by our Sabha.

One other important landmark in the history of this institution is the starting of its own magazine "Gairvani" in December 62. Originally it was a quarterly magazine. Last year we received a grant of Rs. 2000/-from the Central Govt., and contributing a similar sum, we are glad to announce, that we have converted the journal into a monthly. The magazine is intended to publish simple essays in Sanskrit for the benefit of the public and also acquaint them with the activities of the Sabha and its various Branches and Centres. We request the public to enrol themselves as subscribers of this journal and also donate their mite for the success of this journal.

We regret due to lack of funds we could not complete the construction of the building purchased by us. With great difficulty and by spending about Rs. 800 we have completed the construction of the remaining front portion of the building. It is expected that with the cooperation of the public and the Govt,. it will be possible for us to complete the construction of the back portion of the building in a shor ttime.

We are glad to mention that the Sabha had sent Messers. Neti Subbaraya Sastri, Pracharaka Manthri of our Sabha, S. Varadarajan, Nidhi Manthri and K. Muni Reddy Working Committee member, delegates to the Akhila Bharat Sahitya Sammelan recen a held at Gaziabad, New Delhi. Further, one of our Working Commitste members Sri T. K. Tiruvenkatacharlu, was chosen as a member of the Andhra Pradesh Sahitya Akademy.

We are obliged to the Andhra Pradesh Sahitya Akademy for the donation of Rs. 1000/- to our institution for carrying out its objects.

We will be failing in our duty if we do not place on record our grateful thanks to Srimathi Manjubhashini Ammal, for the donation of Rs. 1000/- by her for instituting prizes to deserving students who come out successful in our examinations.

As usual we conducted our examinations in March 64 and September 64. For the March examination students from 34 Centres and for the September examination students from 40 Centres, both from Andhra Pradesh and Tamilnad appeared for the examinations

| Year | No of Students who appeared. | No of students who succeeded. |
|---|---|---|
| 1964 March | 431 | 398 |
| September | 407 | 373 |
| | 831 | 771 |

In the March examination G. Sukumaran of Madura (No. 792) stood first in the Parichaya examination and C. Venkata Sakuntala (No. 522) Guntakal came first in Abhigna examination.

In September 64 V. S. Ramesa Sarma (No. 242) Prasanthi Nilayam, Puttaparthi came first in the Parichaya examination, G. Lalitha (210) Thiruvellikkeni stood first in Abhigna examination and G. Kamaksh. (No 173) Tanjore got the first rank. They will be awarded prizes this year.

We are conducting free classes here and about 50 students are receiving free education There are three teachers conducting classes and coaching up students. We appeal to the parents to send their children to our institution in greater numbers.

The Sabha's finances continue to be meagre and unsatisfactory considering the stupendous activities by us. We request the Government and the public to come forward with financial assistance liberally to accomplish the objects undertaken by us.

Lastly we will be failing in our duty if we do not acknowledge and place on record our thanks to the Associated Auditors who have audited our accounts and also Sri M. Srinivasa Pillai Chartered Accountant for the ready and unstinted help he has been rendering us.

असतोमा सद्गमय ।
तमसोमा ज्योतिर्गमय ।
मृत्योर्मा अमृतं गमय ।

Lead me from unreality to reality.
From darkness to light;
From death to immortality.

---

N. Ramanatha Aiyar,
*Secretary.*

Vijaya Press, Chittoor (A. P.)

क्रोधिदक्षिणायनपरीक्षासु

# सर्वप्रथमतया उत्तीर्णाः



**जी. ललिता,**
तिरुवल्लिक्केणी.
**अभिज्ञा**



**जी. कामाक्षी,**
तंजापुरी.
**विचक्षणा**

**वि. यस्. रमेशशर्मा,**
**परिचयः**
( प्रशान्तिनिलयम् )

अस्य रूपमुद्रा (Block) याः अलाभात् प्रकाशयितुमशक्ताः सः ।

ति. कं. तिरुवेङ्कटाचार्यः,
प्रधानमन्त्री.

R. N. 8145/60. Postal R. No. 493.H.





वार्षिकोत्सवे बालकेभ्यः पारितोषिकाणि वितरन्
चित्पुरपुरपालकसंघविशिष्टाधिकारी
**श्री आर्. रामानुजुलुनायुडुः**



Published by Sri N. Ramanatha Iyer, B.A., B.L., Advocate & Secretary,
S. B. P. Sabha, Chittoor (A. P.)
Printed by Sri T. K. Thiruvengadacharya,
at Vijaya Press, Chittoor (A. P.) C. 1000.